अपि च ।

यः सत्यस्य निधिः श्रियां च सरणिः साम्नां च धाम्नां च यो
यो दाता च दयालुरेव च पदं कीर्तेश्च नीतेश्च यः ।
तस्यैतस्य स एष दूषणकणः कारुण्यपुण्यात्मनः
पात्रापात्रविवेचनं न यदभूत्सर्वस्वदानेष्वपि ॥ ६२ ॥

द्रौपदी । जो जाअवकुमारो भविअ अणासादिदकादम्बरीरसो। स एदस्स दोसो गुणो वा कीरदु ।

बन्दी ।

यागकुण्डशिखिगर्भसंभवं
वन्द्यते न तु करेण बध्यते ।
इत्युदीर्य चतुरोक्ति सात्यकिः
पूजया परिहरत्ययं धनुः ॥ ६३ ॥

परिक्रामितकेन ।

शिशुपालमहीपालो मेकलानां कुलोद्वहः
अयं सगजनिर्घोषो दनघोषसुतः परः ॥ ६४ ॥

पाणिप्रस्थैर्बकुलसुमनःसौरभं यो मिमीते
दंपत्योर्यः सुरतसमये सौख्यसंख्यां करोति ।
यश्च ज्योत्स्नां चुलुकपुटकैः काममाचामतीन्दोः
शक्तः स्तोतुं बत स निखिलान्यस्य कीर्त्यद्भुतानि ॥६५॥

द्रौपदी। जो णिज्जिदसअलसुरासुरो ।

बन्दी ।

दक्षिणं करमुपैति वामतो
वाममञ्चति च दक्षिणादिति ।

---

2) B सः st. यः 7) B करोदु st. कीरदु 10) A B लंघ्यते st. बध्यते
15) A परः st. परः 19) A सपदि st. बत स 22) B पुरम् st. करम्

दूरतो ऽस्य नृपतेर्गुणार्पणे
धारणे ऽपि धनुषो विडम्बना ॥ ६६ ॥

परिक्रामितकेन ।

सत्यसंधो जरासंधः क्रान्तदिग्वलयो बलैः ।
अत्रैष राजते राजा मागधो मागधैः स्तुतः ॥ ६७ ॥ 5

अस्यासमं समरकर्म दिदृक्षमाणै-
र्दोषद्वयं फणिभिरापि चमूरजस्तः ।
यत्कूणितेक्षणतया न कबन्धनृत्यं
दृष्टं श्रुता न च महाभटसिंहनादाः ॥ ६८ ॥

द्रौपदी । जो जणणीजणिददेहखण्डणो जराए रक्खसीए 10
संधिदोत्ति जरासंधो वुच्चदि ।

बन्दी ।

अस्य वैष्णवमिदं महाधनुः स्वप्रभावविभवेन भूपतेः ।
अम्बरे भुवि दिशां च संचये दर्शयत्यतनुकार्मुकावलीः ॥६९॥

परिक्रामितकेन । कथम् । एते राजानो युगपदुपस्थिताश्चाप- 15
मारोपयितुं विडम्बिताश्च । तथा हि

जातं कीकसभङ्गतः शकपतेर्दोर्दण्डयोः खण्डनं
निष्ठ्यूता रमठेश्वरेण वदनात्कीलालकल्लोलिनी ।
जानुभ्यां जगतीं गतश्च तरसा पाण्ड्यः प्रचण्डो ऽप्ययं
कोदण्डेन न खण्डिताः क्षितिभुजो दामोदरीयेण के ॥ ७० ॥ 20

सविषादम् ।

---

1) B नृपतिर्गुणार्पने 5) A मागधस्तुतः 7) B दोषाद्वयं 8) A यच्कूणिताच्चियुगले न B नृत्तुं 9) B सदा st. श्रुता 10) A देहखंडजुनुजराए B खंडणोडज॰ 15) B om. तथा हि । 18) B रमठेश्वरस्य

धिङ्मन्त्रं शकुनेः कुलक्षयकरं दुर्योधनं धिङ्नृपं
धिग्भीष्मं च पितामहं गुरुमपि द्रोणं सपुत्रं च धिक्।
यद्दग्धा जतुधाम्नि पाण्डुतनया जीवेत्स चेदर्जुनो
राधायन्त्रमविद्धमत्र न भवेत्कन्या न च द्रौपदी ॥ ७१ ॥

5 धृष्टद्युम्नः।

वैकुण्ठकार्मुकहठाहरणैककण्ठे
दोर्दण्डमण्डलविखण्डितराजचक्रे।
द्राग्द्रौपदी नमितकण्ठविलोठिहार-
विश्लिष्टयष्टि गणनां गुणिनां करोति ॥ ७२॥

10 सखी। किं पुण एसो भरिदभुवणकोलाहलकलअलो।

बन्दी। अवलोक्य सहर्षम्।

धृष्टद्युम्ने विषण्णे हसति मुरजिति द्रौपदीचित्तनिघ्ने
कोदण्डप्रौढिगाढग्लपितगुरुबले चात्र राज्ञां समाजे।
प्रेङ्खत्कृष्णाजिनानां करकरकजुषां वल्कलव्याकुलानां
15 विप्राणां कोऽपि मध्यादवतरति युवा कार्मुके दत्तदृष्टिः ॥७३॥

अपि च।

व्रीडानतेषु वदनेषु च भूपतीनां
संचारयन्विकचपङ्कजचारुचक्षुः।
अभ्येति मत्तगजखेलगतिः स एष
20 साभ्यर्थनं मुनिजनेन निषिध्यमानः ॥ ७४ ॥

अर्जुनः। कति चित्पदानि गत्वा चतुर्दिशमवलोक्य।

---

1 u. 2) B immer हा st. धिक् 6) A °हठाक्रमणैककुंत B °कुंठे st. कण्ठे 7) A विघंडिनि st. विखण्डित 9) A विश्लिष्टरत्नगणनागुणसंकरोति 10) B कोलाहलेभलो 14) A °पुषां st. जुषां 21) B साभ्यार्थतं

एतत्कृष्णस्य शार्ङ्गं ननु धनुरतनुप्राणदोर्दण्डचण्डै-
र्दूराद्भूपप्रकाण्डैः सपदि परिहृतं शिञ्जिनीसंयतेषु।
मध्ये राज्ञां प्रतिज्ञा मम पुनरियती मज्जुजायन्त्रयोगे
प्रत्येकं पर्वमुद्रा त्रुटति तडिति वा जायते कर्मठं वा॥ ७५॥

सरभसं परिक्रम्य धनुरारोपणं नाटयन्। 5

मद्बाहुयन्त्रयुगयन्त्रितमाततज्यं
न स्याद्धनुः कथमिदं हि रथाङ्गपाणेः।
तुन्नाटनिर्यदि न याति च भूमिपृष्ठ-
मा शेषमा च कमठाधिपमभ्युपेयात् ॥ ७६ ॥

भीमः। वत्स नकुल। भिदुरा भूमिरिति मा कदा चन कद- 10
र्थितकोदण्डतलकोटिः स्यात्किरीटी। तत्तस्याधस्ताद्धस्तं दार्ढ्याय
निदधे। इति तथा करोति।

नकुलः।

धत्से जर्जरतां न मेदिनि मुधा मा शेष शङ्कां कृथा-
स्तुभ्यं कूर्मपते नमस्त्यज भियं दिक्कुञ्जराः स्वस्ति वः। 15
यज्जिष्णुर्भुजयोर्बलेन नयति ज्याहेलयैवाटनीं
धत्ते पाणितलं तले ऽस्य धनुषो वामं हिडिम्बापतिः॥ ७७॥

अर्जुन आरोपयति।

सखी। भअवदि। मिधुणसंघट्टणेक्कदेवदे कुण्ठिदे णीसेसणरेन्द-
चक्के एक्कमेक्कविप्पवीरसमुज्जमसेसं वट्टदि सअंवरविडम्बणं। 20

---

2) A संजतेषु B संजनेषु 4) A पर्वमुद्रार्दतिभुजतिवाजायते B तडिति यज्जायते 6) A पीडितम् st. यन्त्रितम् 8) A तुंनाटतिर्यदि B बध्नाटनिटदि 10) B मा कं चनकदर्थितः कोदंडवलकोटिकिरीटीतत्ताधस्ताद् 19 u. 20) A मिऊअणसंघणेक्ककुडिदत्तणोसे °एसेविप्प° सअंवरदुंवरं B मिऊणासं °कुंठिदाणीसे°

अर्जुनः । बाणमोचं नाटयति ।

आकर्णाञ्चितचापमण्डलमुचा बाणेन यन्त्रोदर-
च्छिद्रोत्सङ्गविनिर्गतेन तरसा विद्धा च राधामुना ।

द्रौपदीमवलोक्य ।

5 तुल्यं शोषणमोहनप्रभृतयः प्रक्षेपकुण्ठक्रमाः
कामेन द्रुपदात्मजाहृदि हठान्न्यस्ताः स्वयं चेषवः ॥ ७८ ॥

सखी । अच्छरीअं अच्छरीअं। असलिलकुवलअकुसुमं विअ
कुसुमकोदण्डतिग्गक्खेवणमोहणोदअं इन्दआलं । से दिट्ठी
विप्पवीरवदणे णिवडन्ती ण विरमदि ।

10 अर्जुनः । कथम् । राधावेधानन्तरमियमस्मासु स्निह्यति। यतः
जैत्रं तन्त्रं कुसुमधनुषः प्रेमसर्वस्वदूताः
सत्यंकाराः प्रणयवितते स्तुष्टये मुष्टियोगाः ।
विन्यस्यन्तः श्रवसि सुतनोर्मेचकाम्भोजभूषा-
मुत्कण्ठन्ते मयि निपतितुं नर्तिताक्षाः कटाक्षाः ॥७९॥

बन्दी । हा हा धिक्कष्टम् ।

ध्रुवमिदमुपदिष्टं कैश्चिदाचार्यपादै-
र्यदुत जनकशोकस्यैकहेतुः कुमारी ।
अकलितकुलशीलो ऽप्येष यत्को ऽपि धन्वी
द्रुपददुहितुरस्या वाञ्छति स्वामिभावम् ॥ ८० ॥

---

6) B न्यस्ता वये चं° 7)—9) B असलिला कुवलया उप्पतोअ कुसमंकुसुमको-
दअडदंडअसंततंतेसणमोहणं इंद °णिविडंतीनवि मति A °तिरमअच्चपणमोहणो-
दआसुदिट्ठाविविप्प° णिपंडदि (om. ण वि°) 11) A चेत्तं st. जैत्रं, °भूताः st. दूताः
12) B पुष्टिवेगाः st. मुष्टियोगाः 14) A उत्प्रेक्ष्यंते st. उत्कण्ठन्ते

अर्जुनः । हंहो वन्दिवृन्दारक । किमत्र कुलान्वेषणेन किं वा शीलपर्यालोचनया । धनुरारोपणमात्रपरिणेया द्रौपदी ।

नेपथ्ये ।

हंहो महाब्राह्मण । त्वामेवं नृपतयः समुदिता भाषन्ते ।

सायकश्च त्वया मुक्तो यन्त्रं वातेन चाहतम् ।
तन्मा वृथा विकत्थस्व न राधां विद्धवानसि ॥ ८१ ॥

पुनः साक्षेपम् ।

रे रे ब्राह्मण मुञ्च विप्लवमिमं श्रुत्यर्थवीथीं स्मर
क्षत्रस्याथ ननु स्वयंवरविधावेकाधिकारः स्थितः ।
तच्चेन्नाद्रियसे स्मरार्द्रहृदयो दण्डयस्त्वमुर्वीभुजां
तत्संकर्षणकार्मुके समुदिता नैते क्षमन्ते नृपाः ॥ ८२ ॥

अर्जुनः । तान्प्रति ।

कस्य द्रोणो धनुषि न गुरुः स्वस्ति देवव्रताय
त्यक्ताभ्यासः कुलपतिरसौ श्रीसमुत्थैर्विलासैः ।
रे कर्णाद्याः शृणुत तदिमां ब्राह्मणस्यास्य वाणीं
राधायन्त्रं रचयत पुनर्विद्धमप्यस्त्वविद्धम् ॥ ८३ ॥

सखी । सहि। इदो तरलिदहारक्खणेक्कसमुक्कमुत्तं उच्चण्डचित्तचण्डिमाकस्सञ्चिदकोदण्डमण्डलं आलिहिदभिण्डिवालं आहिद-

---

2) A सीललोचनया B धनुरोपणपणपरि° 4) A समुदिता नृपतयो 14) AB त्यत्काभ्यासः B कुलपतिरयं 15) A मदिमां B भो st. रे 16) A राधां यंत्रं रचयति 17—26,2) A इदो भरक्किदहारहारवकूमन्मुक्कमुचंडमुदिदचित्तचंडिमाअणाअट्टिदकोदंडमंडलं अलिहिदभिंडिवालं आहिदमंघट्टयदिमसंकुलंकुशभूषणआलिहिदकिकणअंच समंतदो समुत्थरदि विंदणरेंदणं B सइदोतर विरवदाहरणेक्कसमुक्कचक्कमुचंडद विलुअंठमाकणअंकितकोदंडमंडलंअ[Lücke]डिदभिंडिपालं अहिदसंघट्टपट्टिसमशंकुअसंकुपट्टिसिणं आलोकिदकणअअं च समंतदो समुदिरेदि विदंणरेदाणं

संघट्टपट्टिसं संकुलकेसभूस णालङ्किदकङ्कणञ्ञं च समन्तदो समुत्थारोदि विन्दं णरेन्दाणं ।

बन्दी ।

संघट्टोत्पिष्टचूडाच्युतमणिकणिकाकर्बुरैर्बाहुदण्डै-
स्तूणोत्कीर्णास्त्रदण्डाः क्षितिपतय इमे सर्वतः संरभन्ते ।
अप्रेक्षित्वा विलोलां द्रुपददुहितरं विद्धराधाशरव्यं
बाणं कोदण्डदण्डे विदधदयमितो वर्तनं विप्रवीरः ॥ ८४ ॥

नेपथ्ये ।

देवस्य द्युमणेः कुले नृपतयो ये ये च चूडामणेः
श्रीकण्ठस्य निवेदयामि तदिदं तेषां द्वयेषामपि ।
विप्रश्रीवरवान्सहायरहितः को ऽप्येष वः पश्यतां
राधावेधकरो हठेन हरते कीर्त्या समं द्रौपदीम् ॥ ८५ ॥

भीमः । वत्स धनंजय । त्वं कराकलितद्रौपदीक एव मामनुवर्तस्व । अहं राजचक्रस्य पुरतो भवामि । तथा भवति ।

नकुलः । आर्य । इमं तालतरुमायुधीकुरु । भीमस्तथा करोति ।

बन्दी ।

उत्पाटितमहातालकॢप्तचण्डगदाधरः ।
विप्रवीरो द्वितीयो ऽपि पार्थिवाणां पुरः स्थितः ॥ ८६ ॥

अर्जुनः । राजलोकमवलोक्य ।

अयमहमिह विप्रः प्रोतराधारहस्य-
स्त्रिभुवनजयमुद्रा द्रौपदी चेयमत्र ।

---

4) A चूडामणिवरक° 6) A पश्यन् चत्तुस्त्रिभागैर्द्रुपद° 7) A राजते st. वर्तनं 9) B om. ein ये 11) A संपश्यता st. वः प° 12) A कीर्तिं यथा द्रौ° 13) B मामनुभवंतस्त्वाहं रा° 14) A कुर्वन्ति st. भवति 15) A आयुधं कुरु 17) A उत्पादित°

कलयथ यदि दोष्णश्वापदगडप्रचगडा-
स्त्यजत रथगजस्थास्तत्पुरस्योपकगठम् ॥ ८७ ॥

बन्दी । विचिन्त्य ।

वीर्यं वचसि विप्राणां क्षत्रियाणां भुजद्वये ।
इदमत्यन्तमाश्चर्यं भुजवीर्या हि यद्द्विजाः ॥ ८८ ॥ 5

अर्जुनस्तदेव पठति ।

नेपथ्ये ।

साधु ब्राहण साधु । क्षात्रं मार्गमनुवर्तसे ।

भीमः । यद्येवम्

प्रसर्पतु रणाङ्गणे रुधिरकेलिकल्लोलिनी 10
भवन्तु फलिता इव द्विरदमुगडपिगडैर्दिशः ।
नृमांसकवलान्तरेष्वपि च साग्निलेखैर्मुखैः
कृतान्तजयमङ्गलं विदधतु ध्वनिं फेरवाः ॥ ८९ ॥

इति निष्क्रान्ताः सर्वे ।

इति प्रथमो ऽङ्कः ।

---

1) A कथयतयदिष्णश्वापदंडप्रचंडास्त्य° B कलयति यदिदोस्त्स्वापदंडप्रचं-उात्य° 9) B अद्येवं

ततः प्रविशति विदुरः सशारोपकरणश्च पुरुषः ।

विदुरः ।

आ देवाद्दिव्यपङ्केरुहसदनजुषो ऽस्मिन्महाराजवंशे
विष्वक्सेनावताराद्विजयिनि जगतामत्र चित्रप्रसूतेः ।
हे विश्वे लोकपालास्त्वमपि वसुमति ब्रूहि वाचं पवित्रा-
मिन्दोरन्यस्य दृष्टो यदि किल कलया स्यात्तताङ्कः शशाङ्कः॥९०॥

तत्रैव गोत्रे संप्रति तु

वाच्यं यत्र दुरुक्तयः कुचरितं नानाविधा वर्णिका
लाभः सान्द्रतमो रसः किमपरं भावश्च मोहो महान् ।
शैलूषैः कितवैरनेककपटश्रेणीमहानाटकं
द्यूतं यत्किल तत्र कौरवपतिः प्रस्तावनायां स्थितः॥ ९१॥

पुरुषः। अज्जधम्मावदार विदुर। किं पुण एव्वं भणीअदि जदो जूदमहत्तरा एव्वं मन्तअन्ति ।

रणन्तमणिणेउरा रणरणन्तहारच्छडा
कणन्तमणिकङ्कणा मुहरमेहलामालिआ ।
भवन्ति भवणङ्गणे घणघणाउले ते परं
पसण्णदिणसामिणो इह जिणन्ति जूएण जे ९२ ॥

---

1) A सोपकरणश्च 6) A कलयाप्यास्ततां° B कलयाप्यास्त्वतांकः कलंकः 9) A मोहे st. मोहो 11) A किल तं तु कौ °प्रस्तावयन् संस्थितः 12) B om. विदुर 16) B किंकिणी st. कङ्कणा 16) A घणझणातेपर B घणघणत्तूणीपरं 17) A पलूणसामिणो इह

विदुरः। भद्र। तिमिंगिलंगिलन्यायो ऽयं भृङ्गयति नापि जीवति। विचिन्त्य।

श्रीनिर्वासनडिण्डिमो क्वणरवः सद्म स्थिरं छद्मनां
सत्योत्सारणघोषणा तत इतो लज्जानिवापाञ्जलिः।
द्वारं ह्यार्ययशःपराभवपदं गोष्ठी गरिष्ठापदां 5
द्यूतं दुर्नयवारिधिर्निपततां कस्तत्र हस्तग्रहः ॥ ९३ ॥

पुरुषः। अज्ज धम्मावदार विदुर। किं पुण एव्वं सखेदं मन्तीअदि।

विदुरः। भद्र चण्डातक। शृणु यन्मन्त्यते। पुनस्तदेव पठति।

पुरुषः। अवि णं भोदु। सुसच्छचित्तो मित्तेसु सिणिद्धो बन्धूसु 10
णिव्वाजरत्तो कलत्तेसु विणअभङ्गुरो गुरूसु पसादणिच्चो भिक्खेसु
जुहिट्ठिरो। ता किं त्ति एसो कोरवेन्दस्स विसेसपरिप्फन्दो।

विदुरः। किमुच्यते।

युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धो ऽर्जुनो भीमसेनो ऽस्य शाखा। 15
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ ९४ ॥

कौरवपतिस्तु तस्य प्रत्युदाहरणम्।

---

1) A तिमिंगिलरणायोगं भृं॰ नात्र जीवार B नापिजिवते 3) B ॰दिंडिमोद्यनुरवः In A fehlt Z. 4, 5 u. 6 bis निपततां 5) B द्वारंद्वार्यशसाप॰ 7) B किं पुन इदं मन्तीअदि 10)—12) A सुसच्छोमित्तो मित्तेसु, णिसाजरत्तो, भिजेसु, om. विसेस; परिपंचो B अभिसोभाद्रसुसच्छचित्तोमित्तोसुमणिद्धो, णिसद्धरत्ते क॰, भिक्खसु 15) A भीमः स्कन्धो ऽर्जूनस्तस्य B स्कंदो, शाखाः 16) B समृद्धो 18) B तस्योदाहरणं

दुर्योधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखा।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रो मनीषी ॥ ९५ ॥

5 यदयमाहूय वारणावतात्प्रेमप्रणयाभ्यां नाम शकुनिकर्णकुरुपतिप्रेरितेन धृतराष्ट्रेण युधिष्ठिरो ऽभिहितः। यदुत वत्स युधिष्ठिर। दुर्योधनकारिते ऽत्र सदसि भ्रातृद्यूतं प्रवर्तयितव्यमिति।

पुरुषः। तदो तेण किं पडिवण्णं।

10 विदुरः। यत्पाशसंयतो वन्यः करीव प्रतिपद्यते तथा चाभिहितं तेन।

राजसूयक्रतोर्यज्वा पाण्डुपुत्रो युधिष्ठिरः।
आहूतो न निवर्तेत द्यूतादपि रणादपि ॥ ९६ ॥

पुरुषः। अज्जेव्व अहं सउणिणा पउणीकदे अक्खे ससारं सा-
15 रिफलहं च समप्पिअ संपेसिदोम्हि सहामज्झे। ता अज्ज कधेसु। किं पुण कारणं दुज्जोहणस्स दुज्जणत्तणे।

विदुरः। श्रुतो मया कुड्यान्तरितेन शकुनिना सह मन्त्रयमाणो महाराजदुर्योधनः।

तत्रोत्सर्पिणि राजसूयसमये राज्ञः पृथाजन्मनो
20 द्वीपेशैर्विनयान्वितैरुपचितं चित्रैर्महाप्राभृतैः।

---

2) B स्कंदः, AB शाखाः 5) A आहूतो 7) B om. ऽत्र; प्रवर्तव्यमिति 10) A यथा वाभि° st. तथा चा° 12) B पाण्डवपुत्रो 13) B द्यूतायचारणाय च 14) A सारफलहं, सहाभुत्रं st. °मज्झे 16) A दुज्जणत्तणे 17) B om. महा

प्रत्यक्षीकृतवान्यदस्मि विभवं कोशाधिकारे स्थित-
स्तेनाद्यापि निरौषधो मनसि मे दाहज्वरो जृम्भते॥९७॥

अपि च। गन्धाराधिपते मातुल।

मायामये ऽसमसभासलिले महाम्बु
त्यक्त्वान्यतो व्रजति मय्यनभिज्ञभावम्। 5
यत्कृष्णया विहसितं सह फाल्गुनेन
तन्मे मनः कुसुमभावमिदं लुनाति॥ ९८॥

नेपथ्ये।

देवश्चन्द्रकुलप्रकाण्डतिलकः षाड्गुण्यवाचस्पति-
र्वीरो निर्मलकीर्तिनिर्झरगिरिर्भूखण्डविद्याधरः। 10
सप्तद्वीपजयैकलम्भितमहाश्वेतातपत्रोन्नतिः
पाण्डुः पाण्डुयशःकरो विजयते पृथ्वीपृथानन्दनः॥९९॥

पुरुषः। किण्णरकण्ठो एसो जुहिट्ठिरबन्दी पढदि।

पुनर्नेपथ्ये।

नाले सौर्यमहोत्पलस्य विपुले सेतौ समिद्वारिधेः 15
शश्वत्स्वर्गभुजंगचन्दनतरौ क्रीडोपधाने श्रियः।
आलाने जयकुञ्जरस्य सुदृशां कन्दर्पदर्पे चिरं
श्रीदुर्योधनदोष्णि विक्रमधने लीनं जगन्नन्दति॥ १००॥

पुरुषः। एसो दुज्जोहणमाअधो कलकण्ठो णाम।

---

3) A मातुलः 4) A मायामयेमयसभा° B सायामयेमयसमाधितलेमहाबु 5) A व्रजति सप्यनसिजभावात् B °भिन्नभावं 10) B निकर st. निर्झर 11) B कृत्स्नद्वीप° 12) A चंडः पांडयशःकरो B पंडोः पांडुः यशः° 13) A किन्नरकंठो B किंनर° 15) A वारिणः st. वारिधेः 16) A शश्वत्स्वङ्गभु° B °खंडंभु° 17) B सुदृशः st. सुदृशां 19) A सो nach एसो

विदुरः। संप्राप्तावेतौ युधिष्ठिरदुर्योधनौ सभाम्। एते च भीष्मद्रोणकृपहार्दिक्यकर्णसोमदत्ताश्वत्थामादयः कौरवेश्वरभ्रातृशतं च प्रविशन्ति। तदावामपि प्रविशाव।

इति निष्क्रान्तौ।

5 इति विष्कम्भकः।

---

2) B °द्रोणदुर्योधनकृपकृतवर्माणहार्दिक्य° 3) A °मादयो भीमसेनकौ° B °दयः शतं च भ्रातरः कुरवः प्र°

ततः प्रविशति युधिष्ठिरो भीमसेनश्च दुर्योधनः शकुनिश्च तयोस्ताम्बूलकरङ्क-
धारिण्यौ सुनन्दा सुरेखा च ।

युधिष्ठिरः ।

विवर्तयाक्षाञ्छकुने शारक्रीडां प्रवर्तय ।
धृतराष्ट्रस्य पाण्डोश्च ममाज्ञा मौलिमृच्छति ॥१०१॥ 5
राजसूयक्रतोर्यज्वा पाण्डवो ऽहं युधिष्ठिरः ।
आहूतो न निवर्तेयं द्यूतादपि रणादपि ॥१०२॥

शकुनिः । स्वगतं दक्षिणं पाणिमुद्यम्य ।

हंहो हस्त कृतास्त्र दानसलिलप्रक्षालित स्वस्ति ते
लोकेष्वक्षविचक्षणश्च शकुनिः स्वाङ्के ऽपि भक्तस्त्वयि । 10
वीरे माननिधौ पराक्रमधने यद्भागिनेये मम
श्रीः पार्थप्रथमादपास्य भवता कार्या हि दुर्योधने॥१०३॥

तदार्य पणः क्रियताम् ।

युधिष्ठिरः ।

हारो ऽयं केरलस्त्रीविहसितशुचिभिः पङ्क्तिभिर्मौक्तिकानां 15
शुक्रैणैकाकृतीनां कृतसकलसभागर्भचन्द्रोदयश्रीः ।
भ्रातृद्यूते पणो मे रजनिचरपतेरर्जितो राजसूये
यस्यैतन्मध्यरत्नं तिरयति ककुभः कौङ्कुमीभिः प्रभाभिः॥१०४॥

भीमः । भवतस्तु कः पणः ।

---

1) A °करंकावाहिन्यौ 4) B प्रवर्त्तययाचा ऽश्व° 5) B पांडोश्च समाज्ञामौलिसं-
चति 7) B ननुवर्त्तेयं द्यूताय च रणाय च 8) B स्व... यम्य fehlt. 9) A हस्त
नितान्तदान° 11) B तद्भागिनीये 12) A कार्यौ 15) B पंथिभिर् 16) A
°कृतीनकृत° 18) A °रत्नं सुरपतिककुभकौ° B करयति st. तिरयति

दुर्योधनः ।

राजावलीक्रमायातो रत्नकोशः पणो मम।
शकुन्तलाद्याभरणैर्यः पुनाति च पाति च ॥ १०५ ॥

उभौ क्रीडतः ।

5 शकुनिः । जितं महाराजदुर्योधनेन। हंहो युधिष्ठिर । हारितो हारः ।

दुर्योधनः सुरेखायाः कण्ठे परिधत्ते।

सुनन्दा। महाराअ दुज्जोहण। जुहिट्ठिरकण्ठणिवेसी ससीसे पडिच्छणिज्जो दे हारो। जं पुण अम्हारिसजणजोग्गं करेसि 10 ता ण रोहिणीवल्लहकुलोचिदं अणुचिट्ठसि।

भीमः। साधु सुनन्दे साधु। उचितमभिहितम्।

सुरेखा। अइ उद्दामरसीले जूदजिदे वि अहिजणत्तणं।

शकुनिः। स्वगतम्। प्रतिभावती सुरेखा। तं प्रति प्रकाशम्। अपरः पणः क्रियताम्।

15 युधिष्ठिरः। संपादिता तातधृतराष्ट्रस्याज्ञा। तदास्ताम्।

शकुनिः। विहस्य। दुर्योधने क्रीडति कथं धर्मात्मजो विरमति। नन्वधुनैव प्रतिज्ञातम्। आहूतो न निवर्तेयं द्यूतादपि रणादपीति।

युधिष्ठिरः। सुनन्दामवलोक्य सस्मरणम्।

20 कुर्वन्त्यो नयनैरपाङ्गतरलैर्दीर्घायुषं मन्मथं
तन्वन्त्यो हृदि रागिणां रतिमहावल्लीविलासं क्रमात्।

---

3) A °लाद्याभरणं यः 8) A °निवेसीषसमसीसे पडि° B कंठ, dann nach kleiner Lücke निवेसिचससीस पडि° 12) B करेमि 12) A °जिदेपिजंतण B °जिदेधिजतुणा 13) A प्रभावती 18) AB निवर्त्तेत द्यूताय च रणाय च (A चेति) 21) A रागिणो स्मरमहा°

न्यस्यन्तो मदिरामदस्य च हठात्कां चिन्मनोहारिता-
मङ्गैर्मुग्धमधूकपाण्डुभिरिमा वाराङ्गना मे पणः॥१०६॥

भीमः। भवतस्तु कः पणः।

दुर्योधनः।

सुधावीचिमुचां वाग्भिर्विभ्रमवल्लिकुण्डलः। 5
ममापि वारनारीणां स्मरस्मेरो गणः पणः॥ १०७॥

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन।

दुर्योधनः। सुरेखे। त्वमेतासां सुनन्दाप्रभृतीनामधिष्ठात्री भव।

सुरेखा। जं कुरुवदी आणवेदि। प्रणमति। 10

सुनन्दा। धम्मणन्दणो उण जदि जिणन्तो आसि सुरेहाप-
मुहीणं ता अहं अहिट्ठाइआ आसि।

शकुनिः। अपरः पणः क्रियताम्।

युधिष्ठिरः।

निरर्गलविनिर्गलद्गुलुगुलाकरालैर्गलै- 15
रिमे तडिति ताडिताङ्गमरदिण्डिमोड्डामराः।
मदाचमनचञ्चुरप्रचुरचञ्चरीकोच्चयाः
पणः परिणतिक्षणक्षततटान्तरा दन्तिनः॥ १०८॥

भीमः। भवतस्तु कः पणः।

दुर्योधनस्तदेव पठति। 20

उभौ क्रीडतः।

शकुनिः। जिता दन्तिनः।

---

5) A °वाचां st. मुचां   12) A om. आसि nach जिणन्तो, अहिट्ठिआसि B जदि उण   16) A इमे नितततताडि°   17) A चश्चुर f. चञ्चुर B °काचय:
18) A परिणतिचततठादंतिनः।

दुर्योधनः । नेपथ्यं प्रति । दुःशासन । द्यूतदन्तिनां त्वमसि प्रणेता ।

नेपथ्ये । यदादिशत्यार्यदुर्योधनः ।

शकुनिः । अपरः पणः क्रियताम् ।

युधिष्ठिरः ।

5 क्वणत्कनककिङ्किणीमुखरकंधरासंधिभि-
युतास्तरुणतित्तिरच्छविमनोजवैर्वाजिभिः ।
द्रुणाङ्कघनपट्टिशत्रिशिखदण्डिनः स्तम्भिनो
रथाः प्रचलकाञ्चनध्वजमहापताकाः पणः ॥ १०९ ॥

भीमः । भवतस्तु कः पणः ।

10 दुर्योधनस्तदेव पठति ।

उभौ क्रीडतः ।

शकुनिः । हारिता रथाः ।

दुर्योधनः । नेपथ्यं प्रति । सखे ऽङ्गराज । त्वं रथानां नेता भव ।

15 नेपथ्ये । यदादिशति कौरवेश्वरः ।

शकुनिः । अपरः पणः क्रियताम् ।

युधिष्ठिरः ।

महीधरदरीषु ये मुनिनदं पतद्भिः खरै-
र्लिखन्ति च पठन्ति च स्फुटतरं टकारानिव ।
20 विरोचनहयावलीकुलभुवां स तेषामयं
पणः पवनरंहसां मम तुरंगमाणां गणः ॥ ११० ॥

---

3) B तदपरः 5) B कणंकणित° 6) A तित्तिरिछविमनोरमैर् B तित्तिरछदमनो° 7) B त्रिशिखि° 8) B ध्वजकुथाप° 9) u. 10) fehlen in B. 14) A रथनेता 18) A ये निनदनिःप° B महीधरधरासु 19) A ठकारानि च 20) B कुलभवां

भीमः। भवतस्तु कः पणः।

दुर्योधनस्तदेव पठति।

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन।

दुर्योधनः। मातुल। त्वमेतेषां तुरंगमाणां प्रभुर्भव। 5

शकुनिः। यदाह महाराजः। राजानमुद्दिश्य।

किं वाजिभिः किमु गजैः किमथो रथैश्च
सापत्नकं न धृतये धरणिः पणो ऽस्तु।
एकातपत्रमिदमद्य चिराय राज्यं
धर्मात्मजो भजतु वा धृतराष्ट्रजो वा॥ १११॥ 10

युधिष्ठिरः। यद्येवम्

ऐलः प्राक्स पुरूरवाः प्रभुरभूद्यस्योर्वशीवल्लभो
दुःषन्तः स च यो ऽभ्यसूत भरतं शाकुन्तलं शान्तये।
श्रीमाञ्छंतनुरग्रिमः स च सतां गङ्गाकलत्रेण य-
स्तत्सिंहासनमस्तुराशिरशनां शासन्महीं मे पणः॥ ११२॥ 15

भीमः। भवतस्तु कः पणः।

दुर्योधनस्तदेव पठति।

नेपथ्ये।

राजन्युधिष्ठिर नराधिप कौरवेन्द्र
वंशे युवां भगवतो भवशेखरस्य। 20
द्यूतं न युष्मदुचितं ननु चिन्त्यतां च
कैः क्षत्रियैर्वसुमती पणिता पुराणैः॥ ११३॥

1) u. 2) fehlen in B. 5) B भर्त्ता st. प्रभुर् 10) A धर्मात्मजे भवतु वा धृतराष्ट्रजे वा 11) AB यस्योर्वशी वल्लभा 15) A °राशिरसनासारं मही
20) A वंशो st. वंशे

युधिष्ठिरः। भो सभासदः। कथं किल राजसूययज्वा प्रतिज्ञा-
तमर्थं कदर्थयति।

दुर्योधनः। हंहो सभ्याः। अक्षधर्मा अपि निषिध्यन्ते।

उभौ क्रीडतः।

5 शकुनिः। जितं जितं महाराजदुर्योधनेन।

दुर्योधनः। स्वयमहमस्य राज्यार्धस्याधिष्ठाता।

शकुनिः। अपरः पणः क्रियताम्।

युधिष्ठिरः। किं नामावशिष्टं यत्पणीक्रियते।

शकुनिः। किं नाम हारितं शरीरे तिष्ठति। शरीरधना हि रा-
10 जानः।

युधिष्ठिरः। यद्येवम्

निर्यान्ति यस्य वदनाद्वितथा न वाचो
यो राजसूयविधिनिर्धुतपाप्मपङ्कः।
सोढा न चानुजमहाविरहस्य यो ऽस्मि
15 सो ऽयं स्वयं तव पणः प्रथमः पृथाभूः॥ ११४॥

भीमः। स्वगतम्। कथम्। आत्मापि पणीकृतः। अहो सत्य-
संधता युधिष्ठिरस्य। प्रकाशम्। भवतस्तु कः पणः।

दुर्योधनः।

हेलानमन्नृपकिरीटविटङ्ककोटि-
20 शृङ्गाररत्नचितकाञ्चनपादपीठः।

---

1) u. 2) B प्रतिज्ञात अर्थं 3) A सर्वाः st. सभ्याः 4) A परिक्रीडतः 6) A om. स्वयम् B अधिष्ठिता 7) B om. शकुनिः 8)—10) fehlen in B. 13) A °निर्जितपापपंकः 14) u. 15) B यो ऽस्मिन्सो 16) A om. स्वगतम् 19) u. 20) A °मौक्तिकंकारि° B क्रेङ्कारि°

वैतालिकैः स्तुतसमस्तयशास्तवश्रीः
सो ऽयं स्वयं प्रतिपणस्तव कौरवेन्द्रः ॥ ११५ ॥

उभौ क्रीडतः ।

शकुनिः । जितं जितं महाराजदुर्योधनेन ।

युधिष्ठिरः । जितो ऽस्मि । तव नियोगे भृत्यः । 5

शकुनिः । पुनरपरः पणः क्रियताम् ।

युधिष्ठिरः । कः पुनरपरः पणः ।

शकुनिः । भ्रातरः ।

युधिष्ठिरः ।

यो मन्थानकरः क्रतौ निजकुलप्राकारबन्धश्च यो 10
दोर्भ्यां यः प्रसभं व्यधत्त च जरासंधस्य संधिच्छिदाम्
सो ऽयं हप्तहिडिम्बडिम्बविजयी वीरस्त्रिलोकाद्भुतं
भीमो भीमपराक्रमः पृथुगदाव्यग्राग्रपाणिः पणः ॥ ११६ ॥

भीमः । भवतस्तु कः पणः

दुर्योधनः । 15

संकर्षणान्निजतनूज्ज्वलकीर्तिराशेः
सार्धं मयाधिगतदिव्यमहारहस्यः ।
त्वत्सोदरस्य मम सोदर एष वीरो
दुःशासनः प्रतिपणो ऽस्य वृकोदरस्य ॥ ११७ ॥ 20

उभौ क्रीडतः ।

शकुनिः । जितं जितं महाराजदुर्योधनेन ।

---

1) A वैतालिकस्तुत° 5) B ऽस्मि तन्नियोजय कृत्ये । 10) A °कारशृंगश्च 12) A वीर° st. दृप्त° 17) A °गदारहस्यः 20) fehlt in A. 21) A जितं कौरवराजेन

दुर्योधनः। अपरः पणः क्रियताम्।

युधिष्ठिरः।

कर्णप्रावरणैः सहैकचरणानश्वाननैः किंनरा-
स्त्यक्षैस्तुल्यशिखान्वलीमुखमुखैर्यक्षांश्च रक्षांसि च।
5 निर्जित्याकनकाद्रितो जनपदान्यो राजसूये क्रतौ
सम्राजं कृतवान्युधिष्ठिरमलं सो ऽयं किरीटी पणः॥११८॥

भीमः। भवतस्तु कः पणः।

दुर्योधनः।

यो भार्गवाद्भगवतो ऽर्जितचापवेदो
10 द्रोणेन तुल्यगरिमा मम धर्ममित्रम्।
स प्रेरितार्थिजनवाग्भिररिक्तकर्णः
कर्णः स्वयं प्रतिपणो ऽस्य धनंजयस्य॥ ११९॥

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन। तदपरः पणः क्रि-
15 यताम्।

युधिष्ठिरः।

सौहार्दात्प्रणयादथ प्रथमतः स्नेहातिरेकेण वा
यो देवेन रथाङ्गिनापि समरे हित्वा करं लम्भितः।
पाश्चात्यक्षितिपालनिर्मलयशःप्रस्तारहारान्हर-
20 न्सो ऽयं मे नकुलः कुलैकतिलको युद्धप्रवीणः पणः॥१२०॥

भीमः। भवतस्तु कः पणः।

दुर्योधनः।

---

3) u. 4) A °नरान् अचैस; यचांसि र° 10) B मित्रधर्म st. धर्ममित्रम् 14) B om. तद् vor अपरः 17) B स्नेहातिरेकस्य वा B °तिरिक्तस्य वा 20) A युद्धप्रवीरः

नकुलस्यापि ते भ्रातुर्भ्राता प्रतिपणो मम।
बिभ्रत्कीर्तिमहानावि विकर्णः कर्णधारताम् ॥ १२१ ॥

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन। तदपरः पणः क्रियताम्। 5

युधिष्ठिरः।

हेलालोलितपाण्ड्यकेरलबलो यः सिंहलं लङ्घय-
न्द्राक्संक्षुभ्य विभीषणेन तरसा दुरात्करं लम्भितः
नित्यं रावणनिर्जितामरहृतैर्यः संभृतो भूषणैः
सौम्यश्रीः सहदेव एष स पणः क्षत्रैकचूडामणिः ॥ १२२ ॥ 10

भीमः। भवतस्तु कः पणः।

दुर्योधनः। अनिर्जितो भ्राता विकर्ण एव मम पणः।

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन। तदपरः पणः क्रियताम्। 15

युधिष्ठिरः। किं नाम न हारितम्। कः पुनरपरः पणः।

दुर्योधनः। धर्मदारा द्रौपदी।

युधिष्ठिरः।

संभूता द्रुपदाध्वरे हुतभुजः पाण्डोर्नृपस्य स्नुषा
राधावेधमहापणेन विजिता राज्ञां पुरः पश्यताम्। 20
भूभृन्मौलिमणीन्दुदीधितिजलैर्या स्नातपादाम्बुजा
सा देवी विनयाभिमानवसतिः कृष्णा वितृष्णा पणः॥१२३॥

---

1) B प्रतिपणे 2) A महानावं 7) B °लोठितपाण्डु 8) B प्राक्सं°, लंबितः 12) B भ्राता मम विकर्ण एव 16) B नामापहारितं किं पु°

भीमः। भवतस्तु कः पणः।

दुर्योधनः।

ज्येष्ठत्वात्पाण्डुपुत्रस्य धृतराष्ट्रस्य या स्नुषा।
सा देवी देवराजार्हा मम भानुमती पणः॥१२४॥

5 सुनन्दा। स्वगतम्। एसो जेट्ठकणिट्ठाणं विणिमओ।

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन।

दुर्योधनः। दुःशासन। आनीयतां द्यूतदासी द्रौपदी।

नेपथ्ये। यदादिशति कौरवपाण्डवनाथः।

10 दुर्योधनः। अपरः पणः क्रियताम्।

युधिष्ठिरः। न मे पणान्तरमस्ति।

दुर्योधनः।

वर्षाणि द्वादशारण्ये सह तिष्ठतु निष्ठया।
अज्ञातचर्यया वर्षमावयोर्यो विजीयते॥१२५॥

15 युधिष्ठिरस्तदेवानुवदति।

उभौ क्रीडतः।

शकुनिः। जितं जितं महाराजदुर्योधनेन।

नेपथ्ये

पञ्चानां या कलत्रं द्रुपदमखविधौ चाद्भुतं जन्म यस्याः
20 पूताया राजसूयावभृथपरिगमे मन्त्रपूतैः पयोभिः।
तामेतां द्यूतदासीं कुरुपतिनियमं मूर्ध्नि कृत्वा मयान्तः
केशेष्वाकृष्यमाणां शृणुत नृपतयो यस्य शक्तिः स पातु॥१२६॥

---

2—4) fehlt in A. 4) B देवी देव॰मम 6) A ॰कणिट्ठीणं विनिमयं B जइट्ठणकणिट्ठणिविणिमओ 9) B पांडवकौरवनाथः 11) B प्रातिभाति nach अस्ति 13) A निष्ठयाः

दुर्योधनः। कथम्। अयं संपादितमदाज्ञः सद्रौपदीको वत्सदुः-
शासनः प्राप्त एव।

ततः प्रविशति यथानिर्दिष्टा द्रौपदी दुःशासनश्च।

दुःशासनस्तदेव पठति।

सुनन्दा। सहसोपसृत्य हस्तमोटनं नाटयन्ती। दुस्सासण। मुञ्च मुञ्च प- 5
ञ्चालकेसहत्थं।

दुःशासनस्तामपनुद्य समन्तादवलोक्य विहस्य च।

यन्मुक्तः स्फारतारध्वनिभरितसभाकुञ्जगर्भः सरोषं
हुंकारः कातराणां तरलितहृदयः फाल्गुनस्याग्रजेन।
कुर्वद्भिर्हारवल्लीहनननिबिडिताञ्जूटकूटान्नृपैस्त- 10
न्यस्ताः खड्गेषु रत्नत्सरुषु सरभसं प्रहाराय हस्ताः॥१२७॥

सुनन्दा। हस्तमोटनं पुनर्नाटयित्वा।

अस्सा चुम्बिअपल्लवाण बहुणा णेहेण वड्ढुज्जुणा
जाणं मुक्कलवेणिबन्धणकरो भाआ स विज्ञिंजिणो।
चण्डं पण्डवगेहिणीअ चिहुरे आकड्ढअन्तेण ते 15
किं दुस्सासण दुस्सहा कवलिआ हालाहलग्गंगरा॥१२८॥

द्रौपदी। वच्छ दुस्सासण। मुञ्च मे केसहत्थं। कधं एक्कवत्था
भविअ गुरुणरेन्दपुरदो संचरिस्सं।

दुःशासनः। विहस्य। नन्वपनयाम्येकवस्त्रताम्। कोटवीकरणेन वक्त्र-
वस्त्राकर्षणं नाटयन्।

---

1) B कथं मया सं° 5) B हस्तामोटं 9) A स्फारभारव्रतिमरितशशकुंज° 11) A निविडितं B निबिडितां जू° 12) A खड्गेषु st. खड्गेषु 13) B पुनः प-रिमोठनं ना° 14) A अंवाचुं° णेहेणवट्टुज्जुणो B अस्या चु° 15) A वेणि-वंधनकरोभाआसर° B जाणं मुक्किलवेणिबंधमाकरोमाआसविर्त्तिदिणो 16) A चंडपं° चिडरे कठन्तअन्तेतणे B दंडपंडवगेहिणीविदितरेतेकड्डुअंतेण ते 17) A कवलिदोहाहाहरपंकुरा B कवलिदा हालाहलगजङ्करा 18) A om. मे B पुरओ चरिस्सं 20) B °वस्त्राहरणं को° वस्त्रतडनं।

यावन्नैकं द्रुपददुहितुः कृष्यते वस्त्रमस्या-
स्तस्याश्चान्यद्भवति पिहितं तावदङ्गं ततश्च।
खिन्नं चैतन्मम करतलं वाससां चैष राशि-
स्तन्मन्ये ऽसौ त्रिभुवनमनोमोहिनीं वेत्ति विद्याम्॥१२९॥

5 द्रौपदी। भो दुस्सासण। मम किं अवरद्धं जेण दुज्जणोचिदं करेसि।

दुःशासनः। अयि पाञ्चालि। पञ्चानां कलत्रं भूत्वा किमपि व्रीडसे। साक्षेपम्।

हे द्रौपदि त्वमसि काच पतिव्रतानां
10 किं दृष्टपञ्चपुरुषा वनिता कलत्रम्।
दुर्योधनस्य तदिमं भज वाममूरु-
मास्फालितं मुकुलिताङ्गुलिना करेण॥१३०॥

द्रौपदी। तदनादृत्याञ्जलिं बद्ध्वा। हंहो सहामज्झट्ठिदा गुरुणो णरेन्दा अ। दोवदी णिसञ्चं पत्थेदि।

15 नेपथ्ये। द्रौपदि। विकर्णस्त्वामाह। कीदृशो निर्णयः।

द्रौपदी। किं अहं पढमं हारिदा जूदे अप्पा वा धम्मणन्दणेण।

नेपथ्ये। प्रजावति। तवायमभिप्रायः।

यद्यहं हारितपूर्वा भवामि द्यूतकिंकरी।
आत्मा वा हारितः पूर्वं तदहं नास्मि हारिता॥१३१॥

---

1) A यवल्लेकद्रु॰ वस्त्रमेकं 2) A तस्यास्तस्यामन्यैर्भ॰ B तस्यानेन्यद्भवतिपिधत्ताव॰ 5) A मम किं अपदिवदाजेण कधसि B किमपदिर्ध्वादुजणोकिदं करेसि 7) B पांचालानां st. पञ्चानां A किमत्र st. किमपि 8) A सा॰ापं st. साक्षेपम् 11) u. 12) B तदिमं भजवासमूनंमास्फा॰ 16) A om. पढमं 17) B तवायदहं॰ (om. 18 u. 19 bis पूर्वं)

दुःशासनः। सक्रोधम्। अरे रे अकर्ण विकर्ण। सभामध्यमध्यासीने भुवनपतावार्यदुर्योधने किमित्थं प्रलपसि।

प्रविश्य

विकर्णः। साक्षेपम्।

द्यूतं क्षत्रकुलव्रतं नहि भवेज्जेतुः पणो ऽस्वामिना
संरम्भः किमकाण्ड एव भवता सद्वर्त्म यत्त्यज्यते।
भो दुःशासन कः क्रमो द्रुपदजाकेशाम्बराकर्षणे
दुर्वृत्तिं क्षमते न कस्य चिदयं भ्राता विकर्णस्तव॥ १३२॥

दुःशासनः। सभ्रूकुटीबन्धम्। अरे रे धार्तराष्ट्र बटो। वाचाटो ऽसि। तदद्यप्रभृति

न्यायवादी विकर्णो ऽत्रभवन्न यद्यहं बहिः।
तद्यूयं शतमेकोनं षट् च संप्रति पाण्डवाः॥ १३३॥

दुर्योधनः। तदतिमुह्यतस्तव कतरः पन्थाः।

विकर्णः।

यां मे बलः सुबलवान्दलितप्रलम्भो
शिष्येषु सत्स्वपि महत्सु गदामदत्त।
सा मे यदादिशति हस्ततलावतीर्णा
दुर्वृत्तदण्डनविधौ मम सो ऽत्र पन्थाः॥ १३४॥

समन्ताद्वलोक्य।

क्षत्रैकचासचिन्ताकुलमनसि नभःसिन्धुपुत्रे पवित्रे
द्रोणे द्राक् श्मश्रु शुभ्रं दलयति शकुनौ वर्णयत्यक्षशिक्षाम्।

---

1) u. 2) A कर्ण st. अकर्ण. किमर्थं st. °किमित्थं 5) A न स भवेज्जेतुः पणो स्वामिना B कुलव्रं°, स्वामिना 9) A विकर्ण vor तद् 11) A विकर्णाऽत्रभ° 15) A योऽयंबलः B दलितंप्र° 20) A निभः st. नभः 21) A शिक्षयत्यक्ष°

कर्णे कर्णान्तिकस्थे हसति कुरुपतौ दृष्टयः पाण्डवानां
दृप्तं दुःशासनं च क्षितिपतितिलकं यान्ति धर्मात्मजं च॥१३५॥

दुःशासनः। हे द्रौपदीत्यादि पठति।

विकर्णः। अहो उचितकारिता पाण्डवानाम्।

5 आकर्ण्य कौरवकुमारबलं प्रचण्ड-
मत्युल्लसन्ति गुरुरोषकषायताराः।
दृग्दृष्टयो नृपतिसंसदि पाण्डवानां
दृष्ट्वा युधिष्ठिरमुखं पुनरानमन्ति॥ १३६॥

पुनरवलोक्य। अहो किमपि महारम्भः सभासदां क्षोभः।

10 द्योतच्चूडामणीनां चलनझणझणत्कारिहारच्छटानां
प्रेङ्खोलत्कङ्कणालीकलकलमुखरैर्दोर्भिरुड्डामराणाम्।
निःश्वासैः साट्टहासं किमिदमिदमिति त्वङ्गितभ्रूलतानां
संक्षोभो भूपतीनां विततमपि सभागर्भरन्ध्रं रुणद्धि॥१३७॥

पुनरवलोक्य। अहो कौरवपतेराज्ञा। अहो तत्र सत्यता महीपा-
15 लानाम्।

अस्मिन्महासदसि कौरवपाण्डवीये
क्षोभं गते द्रुपदजाचिकुराञ्चनाभिः।
दुर्योधनेन भ्रुकुटी कुटिलीकृता च
जाताश्च भूमिपतयो लिखिता इवैते॥ १३८॥

20 सरभसं युधिष्ठिरमुपसृत्य। आर्ययुधिष्ठिर। प्रतिष्ठस्व वनवासाय।
द्यूतहारितमनुष्ठीयताम्।

5) A कौरवबलं प्रसभं प्र° 6) A अभ्युल्लसंति 7) A प्राग्दृष्टयो B नृपति-संपदि 10) B द्योतः चू°, °हारिच्छटानां 12) B °इदमतोवल्गितभ्रूल° 13) A विमनमपि 14) A सौम्यता st. तत्रसत्यता 17) A om. क्षोभं गते 19) A याताश्च, B जाता च 20) B प्रतिष्ठध्वं 21) A द्यूतसालिमतमनु°

सर्वे समुत्तिष्ठन्ति ।

द्रौपदी । रे रे दुज्जोहण ।

एसो से करकङ्कणा परिहवे आमुक्कबन्धक्कमो
ता सच्चं चिअ चञ्चरीअकसणो केसोच्चओ थाहिइ ।
णक्कवग्गङ्कुसकोडिपाडिअमहादुस्सासणोरत्थली-   5
रत्तुल्लेहि करेहि णिच्चअमिमं भीमो ण जा बन्धइ॥१३९॥

भीमः । रे रे दुर्योधन । दोर्दण्डद्वयभीमस्य भीमसेनस्य मम शृणु प्रतिज्ञाम् ।

येनेयं याज्ञसेनी नृपसदसि हठात्केशपाशे गृहीता
यश्चास्याः कोटवीत्वं बत कलयति भो वाससां राशिकारः । 10
सो ऽहं तेनैव रोषारुणनयनपुटः पाणिनोत्पाटितेन
त्वां हन्ता हन्त वक्षस्तटभुवि रटतो दुष्टदुःशासनस्य॥१४०॥

अपि च । रे रे दुर्योधन ।

नखक्रकचपाटनत्रुटितकीकसाद्वक्षसः
सिरासरणिभिर्मृधे रुधिरमुत्फलत्फेनिलम् ।   15
तदञ्जलिमयं रुषा हृदि निवेश्य दौःशासने
युधिष्ठिरसहोदरः शृणु वृकोदरः पास्यति॥१४१॥

किं च । एकस्मिन्नपराधे ऽपि सर्वे सहधर्मचारिणो ऽपराद्धारः । ततश्च ।

---

3) A एसोसोह्णकट्टणवणे B एसासेकरकंडुणा  4) A तासवं विश्र, केउ-वितुथाहिउ B तासञ्चंविश्र, केसोञ्चडाथाहि इ  5) A °पाडिदमहसाभाषत-त्थली B णकवग्रेंकुस°  6) A तत्थलेहिल्लतेहिणिञ्चयइमंभीमेणञ्चातंतयोत B रं-तुल्लेहिकेरहि, भीमोणजावंधुइ  7) A °नस्यसमस्तमेप्रति°  9) A केशहस्तगृ° B केशपाशौ  10) A वत विदधति हि B कोटवित्तं चतविदधतितोवासरा-राशिकारः  11) B °रुणदलनपुटः  15) A शिरासरणिनिस्सरद्रुधिरधारमुत्फे  16) A तदंजलिरयं, निपात्य दौः B मदंजलि°  18) A om. किं च. अपरा-धिनि सर्वे सहचारिणो

द्रोणादुपार्जितधनुर्निगमप्रबन्धा-
न्सर्वानपि स्थितवतो वयसि प्रकामम् ।
भ्रातॄन्हनिष्यति शतं तव भीमसेनः
काले गदाप्रहरणे रणकर्मशौण्डः ॥ १४२ ॥

5 ततश्च ।

दोर्दण्डमण्डलितचण्डगदाप्रहारै-
रामूलतस्तडडिति त्रुटितोरुसंधेः ।
दुर्योधनस्य विकटां मुकुटाग्रपीडां
द्राग्लोठयिष्यति रणे चरणेन भीमः ॥ १४३ ॥

10 शकुनिः । निर्गच्छत वनवासाय । को हि द्यूतजितानामुज्झिते मौखर्येण ।

इति परिक्रम्य निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः ।

---

1) A प्रहारैः st. प्रबन्धान् 2) A प्रकामे B °श्री 3) B भ्रातॄंश्शतं तव ह° 4) B °प्रहरणे 6) B °मंडितसुचंड° 7) A तटदिति, B तठदिति 8) A °ग्रपीठा B °ग्रवेणीं° 10) B उद्वेजति A °जते भवतामैश्वर्येण

---

Druck von Gebr. Unger in Berlin, Schönebergerstr. 17a.

# Alphabetisches Versverzeichniss.

## Verlag von Karl J. Trübner in Strassburg.

*Benfey, Th.*, Vedica und Verwandtes. 8°. 1877. M. 6. —

— — Vedica und Linguistica. 8°. 1880. M. 10. 50

*Capeller, C.*, Vamanas Stilregeln bearbeitet. 8°. 1880. M. 1. 50

*Holtzmann, A.*, Agni nach den Vorstellungen des Mahabharata. 8°. 1878. M. 1. —

— — *Arjuna.* Ein Beitrag zur Reconstruction des Mahabharata 8°. 1879. M. 1. 60

*Müller, Max.* Ueber die Resultate der Sprachwissenschaft. Vorlesung, gehalten am 23. Mai 1872 an der Kaiserl. Universität zu Strassburg. 3. unveränderte Auflage. 8°. 1872. M. — 80

— — Einleitung in die vergleichende Religionswissenschaft. Vier Vorlesungen nebst zwei Essays über falsche Analogien in der vergleich. Theologie u. über die Philosophie d. Mythologie. 2. Aufl. 8°. Mit dem Porträt des Verf. 1876. M. 6. —

— — Eine Missionsrede, am 23. Dezember in der Westminster-Abtei gehalten. 8°. 1876. M. 1. 60

— — Vorlesungen über den Ursprung und die Entwicklung der Religion. Mit besonderer Rücksicht auf die Religionen des alten Indiens. 8°. 1880. M. 7. —

*Vaitâna Sûtra*, das Ritual des Atharvaveda. Aus dem Sanskrit übersetzt und mit Anmerkungen versehen von Dr. phil. Rich. Garbe. 8°. 1880. M. 4. —

*Râvaṇavaha od. Setubandha.* Prâkṛt u. deutsch herausgeg. von Siegfr. Goldschmidt. Mit Wortindex v. Paul Goldschmidt und dem Herausgeber. 2 Bde. 4°. 1880—1884. M. 43. —

## Verlag von Trübner & Co. in London.

**Agentur und Depôt: Karl J. Trübner in Strassburg.**

*Childers, R. C.*, A Pali-English Dictionary, with Sanskrit Equivalents. Lex.-8°. 1875. M. 63. —

*Muir, J.*, Original Sanskrit Texts on the origin and history of the people of India, their religion and institutions. Collected, translated and illustrated. Second Edition. 5 vols. 8°. London, 1868—1873. M. 100. —

*Rig Veda* im Sambita- u. Pada-Text. 2. Aufl. 2 Bde. 8°. 1878. M. 32. —

*Vaitana Sutra*, the Ritual of the Atharvaveda. Edited with critical notes and indices by Dr. Rich. Garbe. 8°. 1878. M 5. —

Druck von G. Unger in Berlin, Schönebergerstr. 17a.